गोमयादिलिप्ते शुद्धदेशे शुद्धमृदा ईशान्यारंभं प्रदक्षिणमुदकसंस्थं चतुरंगुलोन्नतं वा चतुर्दिक्षु मिलित्वा द्विसप्तत्संगुलपरिधिकं फलितमष्टादशांगुलविस्तृतं होमानुसारेण तदधिकं वा न तु ततो न्यूनं मध्योन्नतं स्थंडिलं कुर्यात् ।। तभ्दोमयेन प्रदक्षिणमुपलिप्य दक्षिणेऽष्टौ उदीच्यां द्वे प्रतीच्यां चतुः प्राच्यामर्धमंगुलानि त्यक्त्वा दक्षिणोपक्रमामुदगायतां प्रादेशमात्रामेकां रेषां तस्या दक्षिणोत्तरयोः प्रागायते पूर्वरेषया असंस्पृष्टे प्रादेशमिते द्वे रेषे लिखित्वा तयोर्मध्ये परस्परसंस्पृष्टा उदक्संस्थाः प्रागायताः प्रादेशसंमितास्त्रिस्त्र इति पट् लेखाः यज्ञीयशकलमूलेन दक्षिणहस्तेनोल्लिख्य रेषासु तत् शकलमुगग्रं निधाय । स्थंडिलमभ्दिरभ्युक्ष्य शकलमाग्नेय्यां निरस्य पाणिं प्रक्षाल्य वाग्यतो भवेत् । ततस्तैजसेनासंभवे मृण्मयेन वा पात्रयुग्मेन संपुटीकृत्य सुवासिन्या स्वगृहात् समृद्धं निर्धूममग्निमाहृत्य स्थंडिलाग्नेय्यां निधाय । जुष्टोदमूना आत्रेयो वसुश्रुतोग्निस्त्रिष्टुप् । जुष्ठोदमूना अतिथिर्दुरोण इमंनो यज्ञमुपयाहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूयता माभराभोजनानि । एह्यग्नेराहुगणोऽग्निस्त्रिष्टुप् अझ्यावाहने विनियोगः ।। एह्यग्र इह होता निषीदादब्धः सुपुर

करून दक्षिणोत्तरेकडे सर्व चार (४) अंगुळें उंच, अथवा चारी दिशेस मिळून ७२ अंगुळें परीघ असलेल्या चतुष्कोणासारिखें, प्रत्येक बाजू १८ अंगुळें लांब याप्रमाणें- – होम जसा करावयाचा असेल तसें अधिकच परंतु कमी न करितां मध्यास जरा उन्नत असें एक स्थंडिल करावें. त्याच्या भोवतीं गोमयानें, दक्षिण भागास ८ अंगुळें, उत्तरेस २, पश्चिमेस ४, व पूर्वेस १/२, याप्रमाणें जागा सोडून सारवून काढावें.

याप्रमाणें सहा लेख यज्ञीय (समिधा) (?) (यज्ञार्चीं लांकडें) च्या तुकड्याच्या मुळानें उजव्या हातानें लिहून, त्या रेषांमध्ये तो तुकडा उत्तराभिमुख रोवावा. स्थंडिलावर पाणी शिंपडून तो तुकडा आग्नेय दिशेस टाकून, हात धुवून मौनव्रतधारण करावें. नंतर

मृण्मय अशा दोन पात्रांत सुवासिनीनें एकावर एक झांकून स्वगृहांतून, चांगला पेटलेला, व निर्धूम असा अग्नि आणून, तो स्थंडिलाच्या आग्नेय बाजूस घालावा. "जुष्टोदसूना॰" इत्यादिकानें आवाहन करावें. " एह्यग्न॰ " इत्यादीनें

एता भवानः । अवतांत्वा रोदसि विश्वमिन्वे यजामहे सौमनसाय देवान। इत्यक्षतैरावाह्य ।। आच्छादनं दूरीकृत्य समस्तव्याहृतीनां परमेष्ठी प्रजापतिः। प्रजापतिर्वृहती। अग्निप्रतिष्ठापने विनियोगः। भूर्भुवः स्वः आत्माभिमुखं पाणिभ्यां षट्सु रेवासु अग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठाप्य। प्रोक्षितेंऽधनानि निक्षिप्य। वेणुधमन्या प्रबोध्य। ध्यायेदेवं। चत्वारिश्रृंगा। वामदेवोऽग्निस्त्रिष्टुप् । अग्निमूर्तिध्याने विनियोगः । ॐ चत्वारिशृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासोऽस्य ।। त्रिधाबद्धो वृषभो रोरवीति महादेवोमर्त्या आविवेश। स्मृतिमंत्राश्च । सप्तहस्तश्चतुःश्रृंगः सप्तजिह्वो द्विशीर्षकः ।। त्रिपात् प्रसन्नवदनः सुखासीनः शुचिस्मितः ।। स्वाहां तु दक्षिणें पार्श्वें देवीं वामे स्वधां तथा।। विभ्रद्दक्षिणहस्तैस्तु शक्मिमन्नं स्त्रुचं स्त्रुवं ।। तोमरं व्यजनं वामे घृतपात्रं च धारयन् ।। मेषारूढो जटाबद्धो गौरवर्णो महौजसः ।। धूमध्वजो लोहिताक्षः सप्तार्चिः सर्वकामदः।। आत्माभिमुखमासीन एवं रुपो हुताशनः ।। इति ध्यात्वा ।। एष हि देवः प्रदिशोनुसर्वाः पूर्वोहि जातः स उ गर्भे अंतः । स विजायमानः स जनिष्यमाणः प्रत्यङ्युस्वस्तिष्ठति विश्वतोमुखः। हे अग्ने प्राङ्युस्वो देव प्रत्यङ्युस्वः सन् मम अभिसंमुखो भव। इत्यक्षतोदकं अग्नेः पूर्वदिग्भागे विसृजेत् ।। ततः प्राणानायम्य । एवं गुणेत्यादिशुभतिथौ मया क्रियमाणे शिवदीक्षाहोमे देवतापरिग्रहार्थं अत्वाधानं करिष्ये इति संकल्प्य।। समिद्धयमादाय

अक्षता घालून आवाहन करावें. नंतर आच्छादन काढून, "समस्त व्याहृतीनां०" इत्यादिकेंकरून अग्निप्रतिष्ठापना करून, वर कोळसे टाकून, वेळूच्या फुंकणीनें फुंकून तो अग्नि प्रज्वलित करून, याप्रकारें घ्यावें –"चत्वारिश्रृंगा०" इत्यादि वेदमंत्रे; व त्याचप्रमाणे — "सप्तहस्तश्रतुःश्रृंगः०" इत्यादि स्मृतिमंत्रे; – यांनीं त्याचें ध्यान करून, "एषहि देवः०" इत्यादिकांने अक्षतोदक अग्नीच्या पूर्व दिग्भागीं सोडावें. नंतर प्राणायाम करून, "एवंगुणेत्यादि शुभतिथौ०"

अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं च अघोरदेवते आज्येन अग्नीषोमौ चक्षुषी आज्येन अत्र प्रधानं शिवषडरीमंत्रेण तत्तत्संख्यया प्रधानदेवता आज्यद्रव्येण शेषेण स्विष्टकृदिध्मसंनहनेन रुद्रमयासमग्निं देवान् विष्णुमग्निं वायुं सूर्यं प्रजापतिं चैताः प्रायश्चित्तदेवता आज्येन ज्ञाताज्ञातदोषनिवर्हणार्थं त्रिवारमग्निं मरुश्चाज्येन अंगदेवताः प्रधान देवताः सर्वाः संनिहिताः संतु सांगोपांगेन कर्मणा सद्यो सक्ष्ये इति संकल्प्य।। तूष्णीं समस्तव्याहृतिभिर्वा आज्यसमिद्धोमं कुर्यात् ।। ततः पत्न्या अग्न्यायतनालंकरणं कारयेत् ।। अग्न्यायतनादष्टांगुलपरिमिते देशे ऐशानीं दिशमारभ्य प्रदक्षिणं समंतात्सोदकेन पाणिना त्रिःपरिमृज्य पूर्वमुपरिनिहित-दर्भैर्दशांगुलिपरिमिते देशे प्राच्यादिपु परिस्मृणीयात् ।। तत्र प्राच्यां प्रतीच्यां चोदगग्रा दर्भाः । अवाच्या मुदीच्यां च प्रागग्राः । पूर्वपश्चात् परिस्तरणमूल-योरूपरि दक्षिणपरिस्तरणं। उत्तरपरिस्तरणं तु तदग्रयोरधस्तात् ते च दर्भाः अनियतसंख्या एकैकस्यां दिशि चत्वार इत्येवं षोडश वा । ततोऽग्ने-र्दक्षिणतो ब्रह्मासनार्थं उत्तरतश्च पात्रासादनार्थं कांश्चित् प्रागग्रान् दर्भानास्तृणीयात् । अग्नेरीशानांतं त्रिरंभसा परिषिच्य ।।उत्तरा -

वगैरे संकल्प करावा. दोन समिधा आणून, "अस्मिन्नन्वाहितेऽग्नौ०" इत्यादि संकल्प करावा. नंतर मौन धारण करून समस्त व्याहृतीनें आज्य (घृत) समिद्ध होम करावा. नंतर पत्नीकडून अग्निस्थान अलंकृत करवावें. अग्निस्थानापासून आठ (८) आंगुळीभर जाग्यांत पूर्वादि दिशेस परिस्तरण (आंथरणें) करावें. तेथें पूर्व व दक्षिण दिशांस उदगम (उत्तरेकडे टोकें केलेले आहेत असे) दर्भ ठेवावे; पश्चिमेस व उत्तरेस प्रागग्र (पूर्वेकडे टोकें केलेले असे) दर्भ ठेवावे. पूर्व पश्चिम परिस्तरणाच्या टोकावर दक्षिण परिस्तरण असावें. उत्तर परिस्तरण त्यांच्या टोकापासून खाली पुष्कळ दर्भांनी करावें, अथवा प्रत्येक दिशेस चार चार याप्रमाणें सोळा दर्भ तरी घ्यावे. नंतर अग्नीच्या दक्षिणेस ब्रह्मासनाथ, उत्तरेस पात्रासनार्थ, कांही प्रागग्र दर्भ टाकावेत.अग्नीभोंवतीं ईशान्येपर्यंत तीन वेळां पाण्यानें परिपिंचन करावें.उत्तरेस

स्तीर्णेषु दक्षिणवामपाणिभ्यां क्रमेण प्रोक्षणीं स्त्रुवं । प्रणीताज्यपात्रे। इध्मा बर्हिषि द्वे द्वे उदगपवर्गं प्राक्संस्थं च न्युब्जान्यासादयेत् । इत्येतावतामेवासादनम् ।। ततः प्रोक्षणीपात्रमुत्तानं कृत्वा तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकु-शद्वय रूपपवित्रे निधाय शुद्धाभिरभ्दिस्तत्पात्रं पूरयित्वा गंधपुष्पादि क्षिप्त्वा हस्तयोरंगुष्ठोपकनिष्ठिकाभ्यां उदगग्रे पृथक् पवित्रे धृत्वा अपस्त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मं च विस्त्रस्य सर्वाणि उत्तानेन हस्तेन त्रिःप्रोक्षयेत् ।। ततो यथोक्तलक्षणमीशानदिगवस्थितं माहेश्वरं अस्मिन् शिवदीक्षाहोमकर्मणि ब्रह्माणं त्वां वृण इति तत्पाणिं पाणिना धृत्वा वरयेत् । ततो ब्रह्मा वृतोऽस्मी त्युक्त्वा प्राङ्मुख आचम्य समस्तपाण्यंगुष्ठो भूत्वा अग्रेणाग्निं परीत्य दक्षिणत उदङ्मुखः स्थित्वा आसनार्थं दर्भेषु दक्षिणभागस्थमेकं दर्भमंगुष्ठानामिकाभ्यां गृहीत्वा निरस्तः परावसुरिति नैऋत्यां निरस्य अपस्पृष्टा इदमहमर्वावसोः सदने सीदामीयुक्त्वा उदङ्मुख एव वामोर्वोरुपरि दक्षिणपादं संस्थाप्य उपविश्य गंधाक्षतादिभिरर्चितः सन् ॐ ब्रह्मा ब्रहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपास स यज्ञं पाहि स यज्ञपतिं पाहि

टाकलेल्या दर्भावर उजव्या व डाव्या हातांनीं, क्रमानें प्रोक्षणी (पात्रविशेष) व स्त्रुव (पळी); प्रणीत अश्या आज्यापात्री; याप्रमाणें आसादन करावें. नंतर प्रोक्षणीपात्र उत्तान (उताणें) करून, तेथें, अंतर्गर्भित, साग्र, समस्थूल, व प्रादेशमात्र अशा दोन कुशांनीं पवित्र बनवून, तें पात्रांत घालावें. नंतर शुद्ध पाण्यानें तें पात्र भरून, गंधपुष्पादि त्यांत टाकून, हातीं आंगठा, व अनामिका यांच्या ठायीं २ पवित्रें धारण करून, पाण्यानें तीन वेळां आचमन करून पात्रें उत्तान (उताणें) सर्वांचें उत्तान हस्तानें प्रोक्षण करावें; नंतर मूळांत दिल्याप्रमाणे विधिवत् होम करून, कुमारास मुळांत सांगितल्याप्रमाणे योगमार्गाने चित्ताकर्षण करून घेऊन, त्याला सच्चिदानंदत्व पटवावें. (याचा सविस्तर विधि फारच असल्यामुळें व मराठींत तो बरोबर कधीच उतरत नसल्यामुळें तो जशाचा तसाच मुळांत पाहावा.)—

स मां पाहीति जस्वा सदा यज्ञमना वर्तेत । ततो यजमानः प्रणीतपात्रमग्नेः प्रत्यङ्निनीय । तत्र पवित्रे निधायोत्पूताभिरभ्दिः पूरयित्वा। गंधपुष्पाक्षतान्निक्षिप्य । मुखसममुद्धत्य। अग्नेरुत्तरतो दर्भेषु निधाय । पवित्रे गृहीत्वान्यैर्दर्भैराच्छादयेत् ।। ततः पवित्रे आज्यपात्रे निधाय तत्पात्रं पुरतः संस्थाप्य तस्मिन्नाज्यमासिच्य अग्नेरुत्तरतः स्थितांगारान् भस्मना सहाग्नेरुदक् परिस्तरणाद्बहिर्निरूह्य तेष्वाज्यपात्रमधिश्रित्य ज्वलता दर्भोल्मुकेनावज्वल्यांगुष्ठपर्वमात्रं प्रक्षालितं दर्भाग्रद्वयं आज्ये प्रक्षिप्य पुनर्ज्वलता तेनैव दर्भोल्मुकेन आज्यं त्रिःपर्यग्नि कृत्वा तदुल्मुकमपास्य अपःस्पृष्ट्वा आज्यपात्रं भुवि कर्षन्निवोदगुद्वास्य अंगारागग्नौ प्रत्यस्यापः स्पृष्ट्रा तत्रस्थभेवाज्यं सवितुष्टा हिरण्यस्तूपःसवितापुर उष्णिक् । आज्यस्योत्पवने विनियोगः ।। सवितुष्टा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोःसूर्यस्य रश्मिभिरिति मंत्रेणैकश्रुत्योच्चारितेनैकवारं द्विस्तूष्णी-मुत्तानपाणिद्वयांगुष्ठोपकनिष्ठिकाभ्यामंतयोर्दर्भयोरसंस्पृष्टं गृहीताभ्यां उदगग्राभ्यां प्रागुत्पूय ते पवित्रे अभ्दिः प्रोक्ष्य स्कंदाय स्वाहेति अग्नौ प्रहरेत् ।। अथाग्नेः पश्चात् परिस्तरणाद्बहिरात्मनोऽग्रतो भुवं प्रोक्ष्य तत्र बर्हिः संनहनीं रज्जुं उदगग्रां प्रसार्य्य तस्यां बर्हिः प्रागग्रमुदगग्रमविरलमास्तीर्य तस्मिन्नाज्यपात्रं निधाय स्त्रुवं संमार्जयेत् ।। तद्यथा ।। दक्षिणेन हस्तेन स्त्रुवं गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य स्त्रुवं निधाय दक्षिणहस्तेन दर्भान् गृहीत्वा स्त्रुवं सव्येन धारयेत् ।। दक्षिणेन हस्तेन स्त्रुवस्य बिलं दर्भाग्रैः प्रागादिप्रागपवर्गं त्रिःसंमृज्य अधस्ताद्दर्भाग्रेणैवाभ्यात्मंबिलपृष्ठं त्रिःसंमृज्य ततो दर्भाणां मूलैर्दंडस्याधस्ताद्बिलपृष्ठादारभ्य यावदुपरि ष्ठाद्बिलं तावत्त्रिः संमृज्याभ्दिः प्रोक्ष्य आज्यस्थाल्या उत्तरतो निधाय उदगसंस्पृष्टा दर्भान् अभ्दिः प्रक्षाल्य अग्नावनुप्रहरेत् ।। एकादशांगुलिपरिमिते देशे गंधाक्षत पुष्पैरग्निं समंत्रमर्चयेत् । तत्र मंत्रौ ।। विश्वानिनेत्वस्यानयोर्वसुश्रुतोऽग्निस्त्रिष्टुप् ।। अग्न्यर्चने विनियोगः ।। विश्वानिनो दुर्गहा

जातवेद इति पाक् सिंधुंन नावा दुरितातिपर्षि इति आग्नेयं । अग्नेऽअत्रिवन्मनसा गृणानः इति दक्षिणे । अस्माकं बोध्य विता तनूनां। इति नैऋत्या । यस्त्वा हृदा कीरिणा मन्यमानः । इति वरुणदिशि । अमर्त्यं मर्त्यो जोहवीमि । इति वायव्यां । जातवेदो यशो अस्मासु धेहि । इति कुबेरदिशि । प्रजाभिरग्ने अमृतत्वमस्यां इति ऐशान्यां ।। एवं अष्टदिक्षु गंधाक्षतपुष्पैरग्निं समंत्रकमभ्यर्चयेत् ।। तत आत्मानंचालं कृत्य हस्तं प्रक्षाल्यं। इध्मबंधनरज्जुं इध्मस्थाने निधाय । पाणिनेध्ममादाय मूलमध्याग्रेषु स्रुवेणाज्येन त्रिरभिघार्य । मूलमध्यमयोर्मध्यभागे गृहीत्वा । अयंत इध्म इत्यस्य वामदेवोऽग्निस्त्रिष्टुप् । इध्माधाने विनियोगः । ॐ अयंत इध्म आत्मा जातवेदस्तेनेध्यवस्वर्धस्व चेद्धवर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेति इध्ममग्रावाधाय जातवेदसेऽग्नय इदं न ममेति त्यजेत् । ततः स्रुवेणाज्यमादाय अग्नेरायतनस्य वायव्यकोणमारभ्याग्नेयकोणपर्यंतं प्रजापतये इति मनसा स्मरन् स्वाहेत्युच्चारयन् नैरंतर्येणाज्यधारा मग्नौ इध्मदारूपरि हुत्वा पुनराज्यमादाय ततः नैऋत्यकोणतः ऐशानीपर्यंतं तथैव हुत्वा त्यक्त्वा च स्रुवेणाज्यमादाय अग्नये स्वाहेत्यग्नेरुत्तरपार्श्वे पूर्वभागे हुत्वा अग्नय इदं न मम इति त्यक्त्वा । पुनराज्यमादाय सोमाय स्वाहेति दक्षिणपार्श्वे तत्समप्रदेशे हुत्वा सोमायेदं न मम इति त्यागः । इत्याज्यसंस्कारांतं कृत्वा दीक्षां कुर्यात् ।। तद्यथा ।।

आचार्योग्नेः पश्चादवस्थित्वा कुमारं प्राङ्मुखमवस्थाप्य कौपीनार्थं त्रिवृतं कार्पाससूत्रं कटावाबध्य कौपीनं परिधाप्य द्वितीयजन्मन्युल्ब प्रतिनिधिभूतं महत् शुक्लवासः समंत्रकं परिधाप्य अन्येन काषायवाससा तथैव प्रावरयेत् ।। तत्र मंत्रः । युवं वस्त्राणीत्यस्यौचथ्यो दीर्घतमा मित्रावरूणस्त्रिष्टुप् । वासो धारणे विनियोगः । ॐ युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मंतवो हसर्गाः।

अवाति रथमनृतानि विश्वक्रृतेन मित्रावरूणा सचेथे इति। ततः कुमारं आत्मनोऽग्नेश्च मध्येन यज्ञपात्रोत्तरं गमयित्वा तत्र विधिवदाचमय्य पुनस्तथैवानीय स्वदक्षिणत उपवेश्य तत आचार्यः आसनमासाद्य । वं वरुणमंडलाय नमः । ह्रः अस्त्राय फडिति उत्तानेन हस्तेन संप्रोक्ष्य । यमिति वायुबीजेन विशोष्य तत्र हीमिति मायाबीजेन उपविश्य पृथिव्या मेरुपृष्ठ ऋषिः । सुतलं छंदः । कूर्मो देवता। आसने विनियोगः । पृथ्वि त्वया धृता लोका देवी त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरुचासनम्"। कूर्मासनाय नमः। अनंतासनाय नमः । योगासनाय नमः। विमलासनाय नमः। मध्ये परमसुखासनाय नमः। "अपसर्पंतु ये भूता ये भूता भुवि संस्थिताः।। ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया।।" अनेन वामपादपार्ष्णिना भूमौ घातत्रयं कृत्वा। "ऊर्ध्वकेशि विरुपाक्षि मांसशोणितभक्षिणि । तिष्ठ देवि शिखाबंधे चामुंडे ह्यपराजिते । अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशः ।। सर्वेषामविरोधेन पूजाकर्म समारभेत्"।। इत्यासनशुद्धिं विधाय ।। प्राणानायम्य । गुरुपंक्तिनमस्कार पूर्वकं शिवषडक्षरीन्यासं यथावत्कृत्वा ।। "प्रसीद देवदेवेश देहमाश्रित्य मामकम् ।। विमोचयैनं विश्वेश घृणयैव घृणानिधे"।। इति देवं संप्रार्थ्य । मंत्रार्थभूतं गुरुस्वरूपं सर्वेश्वरं सर्वात्मकं सत्यज्ञानानंदलक्षणं देवतातत्त्वं परब्रह्माहमस्मीति चिरं ध्यात्वा तदेव गुरुस्वरूपं परं ब्रह्म स्वानुग्रहार्थं लीलया परममंगलात्मिकां सर्वावयवसंपूर्णां सर्वाभरणभूषितां समस्तपरिवारसहितां सर्वपुरुषार्थदात्रीं निखिलतेजोमयीं परशिवदिव्यमूर्तिं धारयित्वा सहृदयकमलमधितिष्ठतीति भावयित्वा मानसैरुपचारैः सर्वाभरणसहितां देवतामाराध्य स्वमूर्तित्वेन संचिंत्य गंधादिभिरभ्यर्च्य अष्टाविंशतिवारं मूलमंत्रं जप्त्वा गुरुदेवतानमस्कारं कृत्वा तदनुज्ञां लब्ध्वा दीक्षां कुर्यात् ।। प्राणायाम्य अस्य कुमारस्य पाशोपक्षयार्थ शांभवीनासका

ज्ञादीक्षां उपमादीक्षां च करिष्ये ।। इति संकल्प्य।। कुमारं सम्यगीक्ष्य हे वत्स सदाचारान् परित्यज्य न प्रवर्तय । इत्याज्ञादीक्षया चोपदिश्य हे शिष्य पुरातन कृताचारसदृशं कुरु इत्युपमादीक्षया चोपदिश्य ।। ततः पंचगव्यं विविवत् सादयेत् ।। प्राणानायस्य ।। देशकालावनुकीर्त्य शिष्यस्य आत्मशुद्ध्यर्थं पंचगव्यप्राशनं कारयितुं पंचगव्यसंयोजनं करिष्ये इति संकल्प्य ।। गोमयेनोपलिते शुद्धस्थंडिले तंडुलैरवकीर्य प्राचीरुदीचीश्चतस्रो रेषाः कृत्वा नवकोष्ठानि भवंति ।। मध्ये कोष्ठे दुग्धं । ऐंद्रे दधि । याम्ये घृतं । पश्चिमे गोमयं । उत्तरे गोमूत्रं । ईशान्ये कुशोदकं । निघाय गायत्र्या गोमूत्रं । "गंधद्वारामिति" गोमर्य । "आप्यास्वेयति" क्षीरं। "दधिक्राण्व" इति दधि । "शुक्रमसि०" इत्यार्ज्य । "देवस्यत्वेति" कुशोदकमभिमंत्र्य पंचोपचारैः संपूज्य ।। एकस्मिन् भाजने दर्भमये कूर्चे प्रणवेन तदर्धमावाह्य गोमूत्रमेकपलं गायत्र्या सिंचयेत् "गंधद्वारेत्यंगुष्ठार्धं" गोमयं निक्षिपेत् ।। आप्यायस्व समे तुते विश्वतः सोम वृष्ण्यं । भवा वाजस्य संगथे । इति क्षीरं सप्तपलं दद्यात् ।। दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखा करत् प्रण आयु षितारिषत् ।। इति दधि ।। शुक्रमसि ज्योतिरसि तेजोसि देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः।। इति घृतं । देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इति कुशोदकं प्रणवेनालोड्य प्राणानायम्य पंचगव्येनांतःशोधनं करोभीति संकल्प्य ।। "यत्त्वगस्थि गतं पापं देहे तिष्ठति मामके।। प्राशनं पंचगव्यस्य दहत्वग्निरिवेंधनं ।।" इति कुमारेण वाचयित्वा पंचगव्यप्राशनं कारयेत् ।। ततः आचार्यः प्राणानायम्य देशकालावनुकीर्त्य शोधनीद्वारा मांसपिंडनिवृत्त्यर्थं स्वस्तिकमंडलं रचयित्वा दर्भासनादौ उत्तराभिमुखं कुमारमुपवेश्य भूतशुद्धिं कुर्यात् ।। तद्यथा ।। आचार्यः दिव्यदृष्ट्या शिशुं विलोक्य तद्धृदंबुजात् तच्चैतन्यं भावनया स्वात्मनि

संयोज्य प्राणानायम्य देहांतर्गतमशुद्धं वायुं रेचकाप्राणायामेन अस्त्रमंत्रेणोत्सार्य बाह्यवायुना उदरं प्रपूर्य पादांगुष्ठद्वयादारभ्य यावदस्थिद्विरूपादूर्ध्वं ब्रह्मबिलांतमेकीभूतां अधोमुखैः पद्ममुकुलैर्युक्तां शरीरांतराले अतिसूक्ष्मविद्युल्लेखामिव भास्वरां अंतःसुषिरयुक्तां सुषुम्नानाडीं संचिंत्य तन्मध्ये हूं इति शिखाबीजं ज्वलंतं संचिंत्य हृत्कंठतालुभ्रुमध्यब्रह्मरंध्रेषु अधोमुखतया स्थितानि पद्ममुकुलानि पूरककुंभकरेचकैर्विकसितोत्तंभितोर्ध्वमुखीकृतानि भावयित्वा मूलाधारप्रदेशे दीपशिखावज्ज्वलंतं हुंकारं गूढसंततोच्चारणात् ऊर्ध्वमुद्गच्छंतं ध्यायन् तेन पंचापि ब्रह्महृत्पद्मनालग्रंथीन् भिन्नान् भावयित्वा हुंकारं प्रति निवृत्या दक्षिणनाड्या वायुं रेचयेत् ।। पुनरपि हुंकारमंत्रंमूलाधारे ध्यायन् पूरकवायुना उपसंहृत्य स्वशरीरस्य व्यापकचैतन्यं हृत्पंकजाश्रितं पुर्यष्टकरूपसूक्ष्मदेहान्वितं जीवं पुर्यष्टकादादाय स्फुरत्तारकाकारं अतिसूक्ष्ममेकाकिनं हामिति हृदयबीजं संपुटितं कृत्वा हुंकारं मूर्ध्निनिवेश्य कुंभकं कृत्वा वायुमूर्ध्वं प्रवर्तयन् संहारमुद्रया तमादाय द्वादशांतपर्यंतं नीत्वा तदुपरिस्थिते परमशिवे योजयेत् ।। "ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयं।। सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।। तत्संयोगिपदद्वंद्वमंगप्रत्यंगपातकं।। उपपातकरोमाणि पिंगभ्रूश्मश्रुलोचनं ।। अधोमुखं कृष्णवर्णमंगुष्ठपरिमाणकं।। खडगचर्मधरं पापं वामकुक्षौ विचिंतयेत् ।।" इति पापपुरुषं विचिंत्य यमिति वायुबीजोत्थितवायुना शोषयित्वा पुनस्तं पापपुरुषं रमित्यग्निबीजोत्थितवह्निना दहित्वा पुनर्यमिति वायुबीजेन तभ्दस्म दक्षिणनासापुटेन बहिर्निःसार्य वमित्यमृतबीजेनोत्थितया अमृतधारया निष्कल्मषं स्वशरीरं संप्लाव्य शुद्धिं कृत्वा पृथिव्यादिभूतशुद्धिं कुर्यात् । पादादारभ्य जानुपर्यंतं चतुरस्त्रं पीतवर्णं कठिणस्वभावं वज्रलांछितं हामिति हृदयबीजेन पार्थिवबीजसहितेन अधिनायकेन सद्योजातेनाधिष्ठितब्रह्मणा कारणेश्वरेण युक्तं निवृत्तिकलारूपं पार्थिवमंडलं भावयामीति विचिंत्य हां निवृत्तिकलायै हुं फ-

डिति पूरकपूर्वं सुषस्नायां यावद्वादशांतं प्राणवायुं प्रेरयित्वा प्रतिनिवृत्त्या दक्षिणनाड्या विरेचयेत् ।। इत्युद्धातपंचकेन गंधरूपरसस्पर्शशब्दगुणानुत्सार्य स्वविरुद्धवायुनाभिभूतां तदाकारां चिंतयेत तदनु जान्वादि नाभिपर्यंतं अर्धचंद्राकारं श्वेतवर्णं शुभ्रमंभोजलांच्छितं द्रवस्वभावं ह्रीमिति शक्तिबीजेनाप्य-ब्बीजेनाधिनायकेन वामदेवेनाधिष्ठितं विष्णुता कारणेश्वरेण युक्तं प्रतिष्ठाकलारूपं आप्यमंडलं भावयामीति विचिंत्य ह्रीं प्रतिष्ठाकलायै हुं फडिति मंत्रेण पूरकपूर्वं सुषुस्नायां यावद्वादशांतं प्राणवायुं प्रेरयित्वा प्रतिनिवृत्त्या दक्षिणनाड्या विरेचयेत् ।। इत्युद्धातचतुष्टयेन अपां रसरूपस्पर्शशब्दगुणा-नुत्सार्य जलं स्वविरुद्धं वह्निनाभिभूतं तदाकारं भावयेत् ।। तदनु नाभ्यादिकंठपर्यंतं त्र्यश्रं रक्तवर्णं पचनस्वभावं स्वस्तिकलांछितं ॐ हूं इति शिखाबीजेन अग्निबीजसहितेन अधिनायकेन अघोरेणाधिष्ठितं रुद्रेण कारणेश्वरेण युक्तं विद्याकलारूपं अग्निमंडलं भावयामीति संचिंत्य । हूं विद्याकलायै हुं फडिति मंत्रेण पूरकपूर्वं सुषुस्नायां यावद्वादशांतं प्राणवायुं प्रेरयित्वा प्रतिनिवृत्त्या दक्षिणनाड्या विरेचयेत् इत्युद्धातत्रयेणाग्निगतान् रूपस्पर्शशब्दगुणानुत्सार्य वह्निं स्वविरुद्धं जलेनाभिभूतं तदाकारं भावयेत् ।। तदनु कंठादिभ्रूमध्यपर्यंतं षडश्रं कृष्णवर्णं चलनस्वभावं षड्बिंदुलांछितं हैं इति वायुबीजेन अधिनायकेन तत्पुरुषेणाधिष्ठितं ईश्वरेण कारणेश्वरेणान्वितं शांतिकलारूपं वायुमंडलं भावयामीति संचिंत्य ।। हैं शांतिकलायै हुं फडिति पूरकपूर्वे सुषुस्नायां यावद्वादशांत प्राणवायुं प्रेरयित्वा प्रतिनिवृत्त्या दक्षिणनाड्या विरेचयेत् ।। इत्युद्धातद्वयेन वायौ स्पर्शशब्दगुणद्वयमुत्सार्य वायुं स्वविरुद्धपृथि-भूतस्वरूपं तदाकारं चिंतयेत् ।। तदनु भ्रूमध्यादिब्रह्मरंध्रपर्यंतं वृत्ताकारं धूम्रवर्णं आकाशस्वभावं बिंदुशक्तिलांछितं हः इत्यस्त्रमंत्रेण संयुक्तं नभोबीजेन अधिनायकेन ईशानेनाधिष्ठितं सदाशिवेन कारणेश्वरेणान्वितं शांत्य-तीतकलामयं आकाशमंडलं भावयामीति संचिंत्य हः शांत्यतीतकलायै

हुं फडिति पूरकपूर्वं सुषम्नायां यावद्वादशांतं प्राणवायुं प्रेरयित्वा प्रतिनिवृत्त्या दक्षिणनाड्या विरेचयेत् ।। इत्येकेनोद्घातेन शब्दगुणमुत्सार्य अनित्यत्वाशुद्धत्वादिस्वरूपं विमुच्य नित्यत्वव्यापकत्वादियुक्तं परमाकाशाभिभूतं तत्स्वरूपं भावयेत् ।। तदनु शब्दस्पर्शरूपरसगंधबुद्ध्यहंकारमनोरूपपुर्यष्टकात्मकसूक्ष्मशरीरशुद्ध्यर्थं हृत्कंठतालुभ्रूमध्यब्रह्मरंध्रस्थितेषु ब्रह्मादिषु कारणपुरुषेषु ब्रह्मणि शब्दस्पर्शौ प्रविलापयामि । रसं विष्णौ प्रविलापयामि। रूपं रुद्रे प्रविलापयामि। बुद्ध्यहंकारावीश्वरे प्रविलापयामि। मनोगंधौ सदाशिवे प्रविलापयामि। इति सूक्ष्मशरीरांशान् शब्दादीन् प्रविलापयेत् ।। ततः स्थूलशरीरशुद्ध्यर्थं स्वशरीरे पादादिशिरःपर्यंतस्थानेषु स्थितानि कृतिरूपादियुक्तानि पंचमहामंत्रभूतानि ध्यात्वा ।। पृथिवीमप्सु प्रविलापयामि। आपोऽग्नौ प्र०। अग्निं वायौ प्र०। वायुमाकाशे प्र० । आकाशमहंकारे प्र०। तमहंकारं महत्त्वत्वे प्र०।। महत्तत्त्वं प्रकृतिस्वरूपमायायां प्रविलापयामि ।। तथाविधां च मायां नित्यशुद्धबुद्धमुक्तस्वरूपे स्वात्मप्रकाशे सत्यज्ञानानंदलक्षणे परमकारणे ब्रह्मणि प्रविलापयामीति प्रविलापनानंतरं दिव्यदृष्ट्या तं शिशुं विलोकयन् आत्मस्थितं तच्चैतन्यं पुनः शिष्ये नियोजयेत् ।। शिष्यस्तु शुद्धोऽहं मुक्तोऽहं सच्चिदानंदस्वरूपोऽहमस्मीति चिरकालं भावयेत् ।। ततः शिशोः ब्रह्मरंध्रगतसहस्त्रदलकमलकर्णिकायां स्थितेन परमात्मना सहैकीभूतं जीवात्मानं सोऽमित्यंकुशकुद्रया सुषुम्नानाडीमार्गेणानीय हृदयकमले स्थापयेत् ।।

ॐ अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः शिरसि स्पृशेत् । ऋग्यजुःसामाथर्वणच्छंदांसीति मुखे । सकलजगतसृष्टिस्थितिसंहारकारिणी प्राणशक्तिर्देवता । इति हृदये । अं बीजं गुह्ये । ह्रीं शक्तिः पादयोः । हूं कीलकं सर्वांगे । प्राणप्रतिष्ठान्यासे

।। अथ प्राणप्रतिष्ठामंत्रः।।

"अस्य श्रीप्राणप्रतिष्ठामंत्रस्य" इत्यादिकांनी प्रतिष्ठान्यास हृदयदिन्यास-

विनियोगः ।।ॐ पृथिव्यप्तेजोवाय्वाकाशात्मने अंगुष्ठाभ्यां नमः। नं शब्दस्पर्शरूपरसगंधात्मने तर्जनीभ्यां नमः। मं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः। शिं वाक्पाणिपादपायूपस्थात्मनेऽनामिकाभ्यां नमः।। वां प्राणापानव्यानोदानसमानवचनादानगमनविसर्गानंदात्मने कनिष्ठिकाभ्यां नमः। यं मनोऽहंकारबुद्धिचित्तज्ञानात्मने करतलकरपृष्ठाभ्यां नमः। एवं हृदयदिन्यासः। ध्यानं ।। रक्तांभोधिस्थपोतोल्लसदवरुणसरोजाधिरूढा कराब्जैः। पाशं कोदंडमिक्षूभ्दवमलिगुणमप्यंकुशं पंचबाणान् ।। बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या। देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः।। शिष्यस्य प्राण इह प्राणः । शिष्यस्य जीव इह स्थितः। शिष्यस्य सर्वेंद्रियाणि कायवाङ्मनश्चक्षुश्रोत्रजिह्वाघ्राणप्राणा इहैवागत्य स्वस्तये सुखं चिरं तिष्ठंतु स्वाहा।। इति प्राणप्रतिष्ठापनं कृत्वा ।।

षट्त्रिंशत्कलान्यासं कुर्यात् ।। तच्चेत्थं ।। आत्मानमावाह्य हृद्यासने मूर्तिं विन्यस्य दंडभंग्या ब्रह्मणि विन्यसेत् ।। बद्धमुष्टिना । अङ्गुष्ठाग्रेण शुद्धस्फटिकसन्निभं "ईशानः सर्वविद्यानां-शिवों" इति मूर्ध्नि विन्यसेत् । तर्जन्यङ्गुष्ठयोगतः "तत्पुरुषाय विद्महे - प्रचोदयात्" इति मुखे विन्यसेत् । मध्यमांगुष्ठयोगेने "अघोरेभ्यो रुद्ररूपेभ्यः इति हृदि अंगुष्ठानामिकायोगात् "वामदेवाय नमो मनोन्मनाय नमः" इतिगुह्ये न्यसेत् ।। कनिष्ठांगुष्ठयोगेन "सद्योजातं भवोभ्दवाय नमः" इति पादयोः।।

वगैरे करून, नंतर "रक्तांभोधिस्थ०" इत्यादि ध्यान करावें. "शिष्यस्य प्राण०" इत्यादिकांनीं प्राणप्रतिष्ठापन करून :—

षट्त्रिंशत् कलान्यास – करावा. तो असा. आत्म्याचें आवाहन करून हृदयरूपी आसनावर मूर्ति बसवून नंतर ती ब्रह्मांत लीन करावी. "बद्धमुष्टिना०" इत्यादि–इत्यादि–योगे त्या त्या स्थानीं मूळांत सांगितल्याप्रमाणे न्यास करावेत.

अथ कलान्यासः ।। बद्धमुष्टिना । अंगुष्ठाग्रेन । ॐ हां "ईशानः सर्वविद्यानां" शशिन्यै नमः। ऊर्ध्वमूर्ध्नि । २ "ईश्वरः सर्वभूतानां" अंगदायै नमः। पूर्वमूर्ध्नि। २ "ब्रह्माधिपतिर्ब्रह्मणोधिपतिः" इष्टदायै नमः। दक्षिणमूर्ध्नि। २ "ब्रह्माशिवो मे अस्तु" मरीच्यै नमः । उत्तरमूर्ध्नि। २ "सदाशिवों" ज्वलिन्यै नमः। पश्चिममूर्ध्नि।५। तर्जन्यंगुष्ठयोगतः । ॐ हां अव्यक्तकलायै नमः। शांत्यतीतकलायै नमः । ऊर्ध्ववक्रे । २ "तत्पुरुषाय विद्महे" । शांत्यै नमः। पूर्ववक्रे । २ "महादेवाय धीमहि" । विद्यायै नमः । दक्षिणवक्रे । २ "तन्नो रुद्रः" प्रतिष्ठायै नमः उत्तवक्रे । २ "प्रचोदयात्" । निवृत्त्यै नमः । पश्चिमवक्रे ।। ५।। मध्यमांगुष्ठयोगेन । २ "अघोरेभ्यः" तमायै नमः। हृदये । २ "अथ घोरेभ्यो" मोहायै नमः। ग्रीवायां । २ "घोर" रक्षायै नमः। दक्षिणांसे । २ "घोरतरेभ्यः" निद्रायै नमः वामांसे । २ "सर्वेभ्यः" सर्वतो ह्यायै नमः। नाभौ । २ "शर्वेभ्यः" मायायै नमः । जठरे । २ "नमस्ते अस्तु रुद्र" अभयायै नमः । पृष्ठे । २ "रूपेभ्यः" रमायै नमः उरसि ।। ८।। अंगुष्ठानामिकायोगात् । ॐ हां "वामदेवाय नमो" रजायै नमः । गुह्ये । २ "ज्येष्ठाय नमः श्रेष्ठाय नमो" रम्यायै नमः। लिंगे । २ "रुद्राय नमः" रत्यै नमः। दक्षिणोरौ । २ "कालाय नमः" काल्यै नमः । वामोरौ। २ "कल" कामायै नमः । दक्षिणजानुनि । २ "विकरणाय" संयमिन्यै नमः । वामजानुनि । २ 'बल' क्रियायै नमः । दक्षिणजंघायां । २ "विकरणाय नमो" बुद्ध्यै नमः । वामजंघायां । २ "बल" कार्यायै नमः । दक्षिणस्फिजि । २ "प्रमथनाय नमो" धात्र्यै नमः । वामस्फि-जि । २ "सर्वभूतदमनाय नमो" ब्रह्मण्यै नमः । कट्यां । २ "मन" मो-

नंतर कलान्यास करावा. मुष्टि बांधून अंगुष्ठाग्रानेः – "ॐ हां ईशानः०" इत्यादिकांनीं– त्या त्या स्थानीं त्या त्या मूर्धांत – त्या त्या वक्रीं – याप्रमाणें ३८ स्थळीं कलान्यास करावा.

हिन्यै नमः ।। दक्षिणपार्श्वे । २ "उन्मनाय नमः" भवायै नमः। वामपार्श्वे ।। १३।। कनिष्ठांगुष्ठयोगेन । "सद्योजातं प्रपद्यामि" सिद्ध्यै नमः । दक्षिणपादे । २ "सद्योजाताय वै नमो नमः" ऋद्ध्यै नमः । वामपादे । २ "भवे" द्युत्यै नमः । दक्षिणपाणौ । २ "अभवे" लक्ष्म्यै नमः । वामपाणौ । २ "अनातिभवे" मेधायै नमः । नासिकायां । २ "भवस्वं मां" कांत्यै नमः । शिरसि । २ "भव" स्वधायै नमः । दक्षिणबाहौ । २ "उभ्दावाय नमः धृत्यै नमः। वामबाहौ ।। ८ ।। एवं अष्टत्रिंशत्कलान्यासं विन्यस्य।।"

अथ षडध्वन्यासः ।। ॐ अं आत्मतत्त्वाय नमः । हृदये । ॐ उं अंतरात्मतत्त्वाय नमः । मुखे । ॐ मं परमात्मतत्त्वाय नमः । मूर्ध्नि विन्यसेत् ।।

ततः कलशाभिषेकाख्यदीक्षा ।। आचार्यः प्राणानामभ्य । अस्य कुमारस्य कलशाभिषेकाख्यदीक्षां करिष्ये ।। इति संकल्प्य ।। ततो देशिकः कुशदूर्वांकुरपल्लवसहितान् ऋत्विग्भिः सह कलशानुद्धत्य तदंतःस्थिततीर्थेन शिष्यमस्तकादिपंचस्थानेषु ईशानदिमंत्रेण प्रोक्षणं कृत्वा ततस्तान् कुशदूर्वांकुरपल्लवसहितान् पंचकलशान् ऋत्विग्भिः सह कलशानुद्धृत्य यथापूर्वं तत्तन्मंत्रेण प्रोक्षणं कृत्वा । एवं त्रिवारमघमर्षणं कृत्वा अनंतरं देशिकः प्राणानायम्य एवंगुण इत्यादिशुभतिथौ अस्य कुमारस्य अनादिमलसंहरणार्थ भूतिपट्टा-

नंतर षडध्वन्यास करावा. "ॐ अं आत्मतत्वाय०" इत्यादिकांनी त्या त्या स्थानीं न्यास करावा.

नंतर कलशाभिषेकनामकदीक्षा आचार्यांने प्राणायमानंतर "अस्य कुमारस्य०" आदि संकल्प करावा. नंतर देशिकानें कुश, दूर्वांकूर, व पल्लव यांहीं युक्त असे कलश ऋत्विजांबरोबर घेऊन, त्यांतील पाण्यानें शिष्याच्या मस्तकादि पंचस्थानीं ईशानादि मंत्रांनी प्रोक्षण करावें. याप्रमाणें तीन वेळां अघमर्षण (पापक्षालन) करून प्राणायामानंतर "एवंगुणेत्यादि०" मूळांत दिल्याप्रमाणे संकल्प करावा.

ख्यदीक्षां करिष्ये ।। भस्मस्नानोद्धूलनत्रिपुंड्रधारण च करिष्ये ।। इति संकल्प्य।।

भस्मस्नानो द्धूलनं कृत्वा । विभूतिं जलेन मिश्रीकृत्य त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषं । अगस्त्यस्य त्रियायुषं । यद्देवानां त्रियायुषं । तन्मे अस्तु त्रियायुषं । इति मंत्रेण त्रियंबकमंत्रेण च । ॐ शिवाय नमः शिरसि । ॐ महेश्वराय नमः ललाटे । ॐ रुद्राय नमः श्रोत्रद्वये । ॐ श्रीकंठाय० गले । ॐ शंभवे० भुजद्वये । ॐ ईश्वराय नमः हृदि । ॐ महादेवाय० नाभिदेशे । ॐ पशुपतये० पृष्ठदेशे । ॐ शंकराय० बाहुयुगुले । ॐ वृषध्वजाय० ककुद्देशे । ॐ परमात्मने० मणिबंधद्वये । एवं भस्मधारणं ।।

अथ रुद्राक्षधारणं ।। रुद्राक्षपूजां कृत्वा ।। "रुद्राक्षवृक्षबीजाय भूतिसंभूतिहेतवे ।। नेत्रत्रयाय रुद्राय नमो लोकहितार्थिने ।।" इति मंत्रेण नमस्कृत्य ।। ॐ श्रीसदाशिवाय नमः शिखायां ।। वह्निसूर्यसोमाधिपाय० शिरसि ।। षट्त्रिंशत्तत्त्वात्सने० मूर्ध्नि ।। ॐ अष्टमूर्त्यात्मने नमः कर्णयोः ।। ॐ त्रियंबककलात्मने नमः कंठे । ॐ श्रीकंठादिमूर्त्यात्मने नमः उरसि ।। ॐ सुखासनादिषोडशमूर्त्यात्मकाय श्रीकंठाय नमः दक्षिणबाहौ।। ॐ सोमकलात्मकाय श्रीसोमनाथाय नमः वामबाहौ ।। ॐ द्वादशादित्यात्मने श्रीमहादेवाय नमः दक्षिणमणिबंधे ।। ॐ केशवादिमूर्त्यधिपाय श्रीउमापतये नमः वाममणिबंधे ।। ॐ शतरुद्रेश्वरात्मकाय श्रीविश्वेश्वराय नमः यज्ञोपवीतं ।। ॐ जननस्थानभूतये सर्वात्मने सर्वकालरूपाय उमापतये

भस्मस्नानास्तव उभदूलन (उधळणें) करून, विभूति मिश्रित करून, "त्रियायुषं जमदग्नेः" इत्यादि मंत्रांनीं व "त्रियंबकं" —मंत्रानेंही अभिमंत्रित करून; "ॐ शिवाय नमः०" इत्यादि मंत्रांनीं त्या त्या स्थानीं भस्म धारण करावें.

अथ रुद्राक्षधारणम् ।। — रुद्राक्षांची पूजा करून, "रुद्राक्षवृक्षबीजाय०"

नमः उदरे धारयेत् ।। इति रुद्राक्षधारणम् । इति भूतिपट्टाख्यदीक्षा ।।

अनंतरं होमः ।। गुरुः यज्ञेश्वरसमीपं गत्वा उपविश्य कुमारं स्वदक्षिणतः उपविश्य प्राणानायम्य ।। अस्यां शुभतिथौ अस्य कुमारस्य समस्तलमाया-विच्छेदपूर्वकतत्तद्दीक्षाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रधानदेवताहोमेन यक्ष्ये। इति संकल्प्य ।। षडक्षरेणाज्येन दशवारं हुत्वा । अनंतरं यथास्थानमागत्य । उपविश्य। स्वदक्षभागे उत्तराभिमुखं शिशुमुवेश्य ।। प्राणानायम्य । देशकालावनुकीर्त्य । अस्य कुमारस्य आयत्ताख्यदीक्षां करिष्ये । इति संकल्प्य । । मंडलसमीपं गत्वा पात्रस्थितपंचसूत्रघटितसर्वमंत्रन्यसकृतशिवलिंगस्थल-मादाय यथास्थानमागत्य उपविश्य लिंगस्थलं स्ववामहस्ते निधाय । शिष्यबद्धांजलिं संपूज्य ततः शिष्यमस्तकं संपूज्य गायत्र्या त्रिवारभिमंत्र्य । तत्र "नीलतोयद-मध्यस्था विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणू (नू)पमा।।

इत्यादि मंत्रानें, त्यास नमन करावें; आणि "ॐ श्रीसदाशिवाय०" इत्यादि मंत्रांनीं त्या त्या स्थानीं रुद्राक्षधारण करावें.

### इति भूतिपट्टाख्यदीक्षा —

नंतर होम. गुरुनें यज्ञेश्वराजवळ बसून, कुमारास आपल्या उजवीकडे बसवून, प्राणायामानंतर; "अस्यां शुभतिथौ०" इत्यादि संकल्प करून, षडक्षरमंत्रानें घृतानें १० वेळा होम करून, नंतर आपापल्या स्थानीं येऊन बसून, आपल्या उजवीकडे उत्तराभिमुख कुमारास बसवून, प्राणायामानंतर देशकालादिकांचें अनुकीर्तन करून; "अस्य कुमारस्य०" इत्यादि संकल्प करावा. मंडलाच्या जवळ जाऊन पात्रामध्यें असलेले पंचसूत्रघटित, व सर्व मंत्रन्यासकृत शिवलिंगस्थल आणून आपापल्या जागी येऊन बसून तें लिंगस्थल आपल्या वामहस्तीं ठेवावें. यथाविधि पूजा करून तें नूतन वस्त्रांत ठेवावें. शिष्यांनीं केलेली अंजुळी, व नंतर त्याचें मस्तक पुजून गायत्रींने ३ वेळा अभिमंत्रून; "नीलतोयद०" इत्यादिकांनें

तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । सब्रह्मा सशिवः सहरिः सेंद्रः सोऽक्षरः परमः स्वराट्"।। इति ज्योतीरूपां चित्कलां ध्यात्वा तत्र मानसिकानुपचारान् प्रकल्प्य तत्सांनिध्यर्थं पुनः संपूज्य । भगवन् आवाहितो भव । स्थापितो भव । संनिहितो भव । संनिरुद्धो भव । संमुखो भव । प्रार्थितो भव । इति षण्मुद्राः प्रदर्श्य ।। तत आचार्यः स्वस्य दक्षिणहस्ते गंधमंडलं कृत्वा । पंचस्वंगुलिषु अंगुष्ठादिक्रमेण नकारदीन् मध्ये श्रीप्रणवं च विन्यस्य सद्योजातादिमूर्तीनावाह्य संपूज्य । "यो वेदादौ स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।।" इति प्रणवं ध्यात्वा ।। अयं मे हस्तो भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ।। इति मंत्रेण अयं हस्तः पाशनिवर्तकः शुभंकरः इति शिवतेजोमयं ध्यात्वा शिवमंत्रमुदीरयन् शिष्यस्य शिरसि सपुष्पं सकुशं शिवहस्तं निधाय शिवासनमिति शिष्यशिरो ध्यात्वा नादबिंदुयुतं चित्पीठं तत्र गुरुश्चिंतयेत।। तस्मिन् पीठे शिवं । ज्वलत्कालानलाभासा तडित्कोटिसम-प्रभा।। तस्योर्ध्वं च शिखा सूक्ष्मा चिद्रूपा परमा कला ।। "यथाकला तथा भावो यथा भावस्तथा मनः ।। यथा मनस्तथा दृष्टिर्यथा दृष्टि-स्तथा स्थलं ।। सा कला परमा सूक्ष्मा तत्वानां बोधिनी परा ।। " इति ज्योतीरूप चित्कला ध्यान, करून मानसिक उपचारानें पुनः पूजा करून; "भग-वन्नवहितो भव०" इत्यादि षण्मुद्रा दाखवून; नंतर आचार्यांने आपल्या उजव्या हातीं गंधाचें मंडळ करून अंगुष्ठापासून प्रारंभ करून ५ ही बोटांत 'न' आदि पंचाक्षरांचा न्यास करावा. मध्यभागीं श्री ॐ काराचा न्यास करावा. नंतर सद्योजा-तादि पंचमूर्तीचे आवाहन करून त्यांची पूजा करावी. "यो वेदादौ०" इत्यादि-काने ॐ काराचें ध्यान करावें. "अयं मे हस्तो०" इत्यादि मंत्रानें हा माझा हात पाशापासून मुक्त करणारा व शुभंकर आहे असें शिवतेजोमय स्मरून, शिवमंत्राचा उच्चार करीत, शिष्याच्या डोक्यांत सपुष्प व सकुश शिवहस्त ठेवून, शिवासन आहे असें शिष्यमस्तकास मानून, नादबिंदुयूक्त चित्पीठ तेथे आहे असें गुरुनें चिंतन करावें. त्या पीठांत शिवाचे " ज्वलत्कालानलाभासा० " इत्यादि

शिवं ध्यात्वा संपूज्य तेनैव हस्तेन शिशोः सर्वांगालंभनं कुर्यात् ।। अनंतरं तां शिष्यमस्तकस्थितकलां लिंगे समुपवेशयेत् ।।

यथा ।। गुरुः पुष्पाक्षतादिसहितः स्वांजलिः सन् । स ॐकारोय ॐकारःस प्रणवोयःप्रणवः स सर्वव्यापी सोऽ नंतो योऽनंतः तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुल्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परब्रह्म स एव स एको रुद्रः स ईश्वरः स भगवान् स महेश्वरः स महादेवः ।। इति मंत्रेण च ब्रह्मरंध्रस्थितसहस्त्रदलकमलकर्णिकाविहरत्कोटिसूर्यप्रतीकाशामतिसूक्ष्मरूपां चित्कलां भावमनोदृष्टिद्वारा स्वरूपीकृत्य ।। "नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा।। नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । सब्रह्मा सशिवः सहरिः सेंद्रः सोऽक्षरः परः स्वराट् । इति परशिवमूर्तिं सुषुम्नानाड्या निर्गमय्य तत्र पुष्पादिसहितस्वांजला-वानीय मूलमंत्रपूर्वकं सर्वांतर्यामिणं लोकानुग्रहाय गृहीतविग्रहं ज्योतिर्मयं सर्वमंगलात्मकं भगवंतमावाहयामीति तां शिवकलां लिंगे स्थापयेत् ।। आवाहितो भव । स्थापितो भव । संनिहितो भव । संनिरुद्धो भव । संमुखो भव । प्रार्थितो भव । इति षण्मुद्राः प्रदर्श्य । अभिमर्शन-पूर्वकं अष्टोत्तरशतमूलमंत्रं जप्त्वा प्रांजलिः सन् भगवन् परशिव नित्यमत्र"

ध्यान करून त्यास पुजून, त्याच हस्तानें शिशूचें सर्वांग कुरवाळावें. नंतर शिष्य मस्तकी असलेली कला लिंगांत आणवावी– गुरूनें हातीं पुष्प व अक्षता घेऊन, अंजुळी करून, "स ॐकारो य०" इत्यादि मंत्रांनी ब्रह्मरंध्रस्थित सहस्त्रदल कमलकर्णिकेमध्यें खेळत असलेल्या कोटिसूर्यांप्रमाणे प्रकाशमान, व सूक्ष्मरूप अशा, चित्कलेस भावनेनें व मानसिक दृष्टीनें जाणून; "नीलतोयद०" इत्यादिकानें परशिव मूर्तीस सुषुम्ना नाडीनें बाहेर घालवून; नंतर पुष्पादिक स्वांजुळींत आणून मूलमंत्रपूर्वक "सर्वांतर्यामिण०" इत्यादिकानें शिवकलेस लिंगस्थलीं स्थापावें. "आवाहितो भव०" इत्यादि षण्मुद्रा दाखवून अभिमर्शन (स्पर्श) पूर्वक १०८ वेळा मूळमंत्र जपून, अंजलि करून, "भगवन् परशिव०" इत्यादि

स्थिरो भव ।। इति देव संप्राथ्र्य विज्ञाप्य संपूज्य शिवलिंगस्य कुमारस्य मध्ये अंत:पटं धारयित्वा मंगलाष्टकं पठता "तदेव लग्नमिति" पठन् शुभे मुहूर्ते अंत:पटमुदगपसार्य हे वत्स एतत्संपूजितं शिवलिंगं विलोकय । इत्युक्त्वा मंत्राक्षतान् शिष्यशिरसि विकीर्य ।। यजमानः प्राणानायम्य देशकालौ संकीर्त्य शुभतिथौ अस्य कुमारस्य स्वायत्ताभिधानदीक्षां करिष्ये इति संकल्प्य।।

आचार्यः वामहस्ते शिवलिंगं निधाय पुष्पांजलिं दत्वा । मंगलाष्टकं पठता "तदैव लग्नं" इत्युक्ते शिष्यस्तु "ॐ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारपिता भूयासं करणपोः श्रुतं माचोढं ममामुष्य ॐ ।। इति शिष्यसंप्रार्थनानंतरं आचार्यः ॐ ऊर्ध्वाय नमः । ॐ सुवर्णाय नमः । सुवर्णलिंगाय नमः । ॐ दिव्याय नमः । दिव्यलिंगाय नमः । ॐ भवाय नमः । भवलिंगाय नमः । ॐ शर्वाय नमः। शर्वलिंगाय नमः । ॐ शिवाय नमः । शिवलिंगाय नमः । ॐ ज्वलाय नमः । ज्वलिंगाय नमः । ॐ आत्मने नमः । आत्मलिंगाय नमः । ॐ परमाय नमः । परमलिंगाय नमः । एतत्सोमस्य सूर्यस्य सर्वलिंग स्थापयति पाणिमंत्रं पवित्रं।। इति शिष्यवामहस्ते उत्तराभिमुखं सोमसूत्रं यथा भवति तथा शिव-देवाची प्रार्थना करून, पूजा करून; शिवलिंगाचा संबंध ठेऊन व मंगलाष्टक म्हणून, "तदेव लग्नं०" इत्यादि ह्मणून "हे वत्स०" इत्यादि ह्मणून मंत्राक्षता शिष्याच्या मस्तकावर टाकून; यजमानानें प्राणायामानंतर देशकालादिकांचे संकीर्तन करून "शुभ तिथौ अस्य कुमारस्य०" इत्यादी संकल्प करावा.

नंतर आचार्याने वामहस्तीं शिवलिंग ठेवून पुष्पांजलि द्यावी. मंगलाष्टक ह्मणून "तदेव लग्नं०" इत्यादिक पठन करून; नंतर शिष्यानें "ॐ नमो ब्रह्मणे०" इत्यादि विशिष्ट संप्रार्थना करावी. नंतर आचार्यांनें "ॐ ऊर्ध्वाय नमः" इत्यादि मंत्रांनी शिष्याच्या डाव्या हातीं, उत्तराभिमुख, सोमसूत्र जसें असतें तसे, शिवलिंग

लिंगं निधाय हे वत्स तव प्राणलिंगमेतदिति भावय । हे वत्स एतदेव खलु सर्वतत्त्वातीतं परवस्त्विति अनुचिंतय । हे वत्स इदमेव हि अजहर्योरपि दुर्लक्षं निजतत्त्वमिति निश्चिनु । निमिषार्धमप्येतत् त्वच्छरीरान्न वियोजयन् अवधानेन धारय । त्रिकालमप्येतत्समर्चां नियमेन समाचर । यत्किंचिदपि वस्तुजातं प्राणलिंगेऽस्मिन् असमर्प्य न स्वीकुरु । इतो भोगमोक्षादयः सर्वेऽपि पुरुषार्थाः करगता एवेति विश्वसिहि सर्वक्लेशान्परित्यज्य सदा सुखयुक्तो भव। सत्यमिदं सत्यमिदं इति । ॐ यज्ञोपवीतमिति मंत्रेण द्विजत्वचिन्हार्थं शिवलिंगं दद्यात् ।। यज्ञोपवीतमित्यस्य परब्रह्म परमात्मा त्रिष्टुप् । शिवलिंगधारणे विनियोगः । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः। इति मंत्रेण कुमारहृदयस्थाने सज्जिकायां पट्टवस्त्रेण वा बध्नीयात् । अथाभिवादनप्रकारः ।। कुमारः। प्रत्यङ्मुखीभूय आचार्याभिमुखो भूत्वा दक्षिणं जानु भूतले निधाय पाणिभ्यां यथा सव्यदक्षिणं श्रोत्रे संस्पृश्य व्यस्तपाणिराचार्यस्य दक्षिणपादं स्वदक्षिणहस्तेन सव्यं च सव्यहस्तेन जानुप्रभृतिपादपर्यंत स्पृष्टा अमुकगोत्रो अमुकशर्मा अहं भो अभिवादये । इत्युच्चारयन् शिरोऽवनतिपूर्वकमभिवाद्य आचार्येण आयुष्मान् भव सौम्य देवदत्तशर्मन्निति ठेवून "हे वत्स तव प्राणलिंगं०" इत्यादिकांनीं — व "ॐ यज्ञोपवीतं०" या मंत्रानें द्विजत्वचिन्हार्थ शिवलिंग (धारणास्तव) द्यावें. "यज्ञोपवीतमित्यस्य०" इत्यादि मंत्रानें कुमाराच्या हृदयस्थानीं पट्टवस्त्रानें बांधावें.

आतां अभिवादनप्रकार सांगतों. कुमार प्रत्यङ्मुख होऊन व आचार्यांच्या अभिमुख होऊन, उजव्या गुडघा भूतळावर ठेवून, हातानें क्रमेंकरून डावा व उजवा कान शिवून, आचार्यांचा दक्षिणपाद आपल्या दक्षिण हस्तानें, व वामपाद आपल्या वामहस्तानें — याप्रमाणें व्यस्तपाणि होऊन, — गुडघ्यापासून पायापर्यंत स्पर्श करून, "अमुक गोत्रो०" इत्यादि ह्मणून, मस्तक नम्र करून आचार्यास नमस्कार करावा. नंतर आचार्यांने " आयुष्मान भव० " इत्यादि आशीर्वाद

प्रयुक्तशीर्वादो विनयावनतो भूत्वा शिवषडक्षर्युपदेशं वांछन्नधिभो शिवषडक्षरीं भो अनुब्रूहीत्याचार्यं प्रत्युक्त्वा वामपाणिमुत्तानीकृत्य दक्षिणपाणिं न्यड्मुखीकृत्य संधाय पाणिपृष्ठमंगुलीश्चांगुष्ठौ च दृढीकृत्य तं ब्रह्माजलिं दक्षिणांके निक्षिष्य उदड्मुखः सन् आचार्यांतिकमासीत ।। अथाचार्यः प्राणानायम्य देशकालावनु-कीर्त्य अस्यां शुभतिथौ अस्य कुमारस्य सर्वार्थसिद्धिप्रदमनुदीक्षां करिष्ये इति संकल्प्य ।। शिष्यांजलिं तत्परिधानीयवाससाऽऽच्छाद्य स्वपाणिभ्यां तदंजलिं परिगृह्य ।। ॐ अस्य श्रीशिवपंचाक्षरीमहामंत्रस्य वामदेवो ऋषिः । पंक्तिश्छंदः । सदाशिवो देवता । ॐ बीजं । उमा शक्तिः । शिव इति कीलंक। श्रीसदाशिवप्रीत्यर्थे जपे विनियोगः । ॐ यं ॐ सर्वशक्तिधाम्ने अंगुष्ठाभ्यां नमः । ॐ वां ॐ नित्यतृप्त शक्तिधाम्ने तर्जनीभ्यां नमः । ॐ शिं ॐ अनादिबोधशक्तिधास्त्रे मध्यमाभ्यां नमः । ॐ मं ॐ स्वतंत्रशक्तिधास्ने अनामिकाभ्यां नमः । ॐ नं ॐ अलुप्तशक्तिधास्ने कनिष्ठिकाभ्यां नमः । ॐॐॐ अनंत शक्तिधास्ने करतलकरपृष्ठाभ्यां नमः । ॐ सर्वज्ञशक्तिधास्ने हृदयाय नमः । ॐ नं ॐ नित्यतृप्तशक्तिधास्त्रे शिरसे स्वाहा । ॐ मं ॐ अनादिबोधशक्तिधास्त्रे शिखायै वषट् । ॐ शिं ॐ स्वतंत्रशक्तिधास्त्रे कवचाय हुं । ॐ वां ॐ अलुप्ताशक्तिधास्त्रे नेत्रत्रयाय वौषट् ।। ॐ यं ॐ अनंतशक्तिधास्त्रे अस्त्राय फट् ।। भूर्भुवस्वरों इति दिग्बंध :।।

दिल्यानंतर, विनयानें नम्र होऊन, शिवषडक्षरीच्या उपदेशाची इच्छा धरून, "अधि भो शिवषडक्षरीं०" इत्यादि आचार्यास ह्मणून; उजवा हात खालीं व डावा हात उताणा करून, ते जोडून, हस्तपृष्ठ, अंगुळी, व अंगुष्ठ दृढ करून, ही ब्रह्मांजलि उजव्या मांडीवर ठेवून, उत्तरमुख होऊन, आचार्याजवळ बसावें. आचार्यांनें प्राणायामानंतर देशकालादिकांचें अनुकीर्तन करून "अस्यां शुभतिथौ०" इत्यादि संकल्प करावा. शिष्यांजलि त्यानें परिधान केलेल्या वस्त्रानें झांकून आपल्या दोहों हातांनीं ती अंजुळी घेऊन, "ॐ अस्य श्रीशिवपंचाक्षरी०" इत्यादिकानें त्या त्या स्थानी अंगुष्ठादिन्यास व त्याचप्रमाणें हृदयादिन्यास करून; "भूर्भुवःस्वरों" यानें दिग्बंध करावा.

अथध्यानं ।। "ध्यायेन्नित्यं गिरीशं रजतगिरिनिभं चारुचंद्रावतंसं। रत्नाकल्पोज्जवलांगं परशुमृगवराभीतिहस्तं प्रसन्नं।। पद्मासीनं समंतात्स्तु-तममरगणैर्व्याघ्रकृत्तिं वसानं । विश्वाद्यं विश्वरूपं निखिलभयहरं पंचवक्रं त्रिनेत्रम्"।। इति ध्यानम् ।। स्वयमुक्त्वा वाचयित्वा प्रणवसहितमूलपंचाक्षरीं स्वयमुक्त्वा त्रिवारं वाचयेत् ।। ततः मम व्रत इत्यस्य प्रजापति ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छंदः । वटोर्हृदये ऊर्ध्वांगुलिपाणिनिधाने विनियोगः।। ॐ मम व्रते हृदयं तें ददामि । मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकव्रत्तो जुषस्व । बृहस्पतिष्टानियुनक्त मह्यमिति स्वपाणिमूर्ध्वांगुलिं ब्रह्मचारिणो हृदयेशे निधाय ।। तस्य रक्षणार्थं शुध्यर्थं च मेखलामाबध्नीयात् ।। तत्र । इयं दुरुक्तादिति द्वयोर्वामदेवो मेखला त्रिष्टुप् । मेखलाबंधने विनियोगः ।। ॐ इयं दुरुक्तात्परिबाधमाना शर्मवरूथं पुनतीन आगात् । प्राणापानाभ्यां बलमा भरंती प्रिया देवानां सुभगा मेखलेपं । ऋतस्य गोप्त्री तपसः परस्पिघ्रती रक्षः सहमाना अरातीः । सानः समंतमनुपरेहि भद्रया । भर्तारस्ते मेखले मा रिषाम । इति वाचयित्वा मेखलां त्रिरावृत्य नाभिप्रदेशे ग्रंथित्रयं कुर्यात् ।। तदा वटुः रहस्यांगसहितवेदत्रयेणावृत्तोऽहं इति मन्येत।। ततः । तद्धर्मक्षेमार्थ अधर्मन्निवृत्तये च केशसंमितं पालाशदंडं दद्यात् ।। तत्र । स्वस्ति न इत्यस्य स्वस्त्यात्रेयो विश्वेदेवास्त्रिष्टुप् । दंडदाने

नंतर, ध्यान करावें. "ध्यायेन्नित्यं गिरीशं" इत्यादि ध्यान स्वतः ह्मणून व त्याकडून ह्मणवून, प्रणवसहित मूलपंचाक्षरीमंत्र स्वतः ह्मणून तीनवेळा त्याजकडून ह्मणवावें. नंतर "मम व्रते" इत्यादिकांनी आपला ऊर्ध्वांगुलि हस्त ब्रह्मचा-याच्या हृदयी ठेवून; त्याच्या रक्षणार्थ व शुद्धर्थ मेखला बांधावी. "इयं दुरुक्तादि०" इत्यादि ह्मणवून मेखला तीनवेळा गुंडाळून नाभिप्रदेशी तीन गांठी द्याव्यात. तेव्हां बटूनें, "रहस्य व अंगे यांसहित वेदत्रयानें मी वेष्टित आहें" असें मानावें. नंतर त्याच्या धर्माचरणांत व्यत्यय न यावा ह्मणून, अधर्मापासून त्याची निवृत्ति व्हावी

विनियोगः । ॐ स्वस्तिनो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः। स्वस्तिपूषा असुरो दधातु नः । स्वस्ति द्यावापृथिवी सुचेतु ना ।। ततो बटोः तभ्दहणे मंत्रः ।। "अदांतं दमयित्वा मां मार्गे संस्थापयन्स्वयम् ।। दंडः करे स्थितो यस्मात् तस्माद्रक्ष यतोऽभयं" इति वाचयेत् । ततः कुमारस्याचारमादिशेत् । ब्रह्मचार्यसि । आचमनं कुरु । मूत्रपुरीषादौ शुध्यर्थमित्यर्थः ।। कर्म कुरु । शिवपूजादीत्यर्थः।। दिवा मा स्वाप्सीः । आचार्याधीनो वेदधिष्येत । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातंतु माव्यवभत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यमिति धर्मान् बोधयेत् ।। ततः आचार्यः यज्ञेश्वरसमीपं गत्वा उपविश्य स्रुवेणाज्यं गृहीत्वा । यदस्येति हिरण्यगर्भोऽग्निरिति धृतिः । स्विष्टकृद्धोमे विनियोगः ।। ॐ यदस्य कर्मणो त्यरीरिचं यद्वान्यूनमिहाकरं । अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुत करोतु मे। अग्नये स्विष्टकृते सुहुतदुते सर्वप्रायश्चित्ताहुतीनां कामानां सवर्धयित्रे सर्वान्नः कामान् समर्थय स्वाहा ।। इत्येकश्रुत्योचार्य अग्नावीशानदेशे जुहुयात् । स्विष्टकृते अग्रय इदं न मम इति त्यागः ।। ततोग्नेरुत्तरतः स्थितामिध्मबंधनरज्जुं विस्रस्य । प्रोक्ष्य पशुपतये रुद्राय स्वाहा ।इति हुत्वा । पशुपतये

ह्मणून, केशसंमित पालाशदंड त्याच्या हाती द्यावा. नंतर "स्वस्तिनो०" इत्यादिकांनी — व "आदांतं०" इत्यादिकांनी, दंड ग्रहण करवावा. नंतर "अभय असो" असें ह्मणवावें. नंतर कुमारास खालीलप्रमाणें आचार सांगावा.-- "ब्रह्मचार्यसि०" इत्यादि; इत्यादि, धर्म सांगावा. नंतर आचार्यांने कलशापुढे बसून, पळीनें घृत घेऊन, "यदस्य०" इत्यादि मंत्रांचा उच्चार करून अग्नीच्या ईशान्यभागी होम करावा. त्यावेळी "स्विष्टकृते०" इत्यादि ह्मणून अग्नींत घृत सोडावें. नंतर अग्नींच्या उत्तरेस असलेली, इध्म बंधनाची दोरी सोडवी. नंतर (हस्त) धुवून " पशुपतये रुद्राय स्वाहा " या मंत्रांनीं हवन करून; "पशुपतये"

रुद्रायेदं न मम । अपः स्पृष्टा।। अथ स्त्रुवेण प्रायश्चित्ताज्याहुतीः सप्त जुहुयात् ।। तत्रमंत्राः ।। अयाश्चेति मंत्रस्य विमदो यालग्निः पंक्तिः । प्रायश्चित्ताज्यहोमे विनियोगः ।। अपाश्चाग्रेस्यनभिशस्तीश्च सत्यमित्वमया असि । अयासा वयसा कृतो या सन् हव्यमूहिषे व्यानो धेहि भेषजं स्वाहा इत्येकश्रुत्या जुहुयात् । अयासे अग्नय इदं न मम । अतो देवा मेधातिथिर्देवा गायत्री प्रायश्चित्ताज्यहोमे विनियोगः । अतो देवा अवंतु नो यतो विष्णुर्विचक्रमे पृथिव्याः सप्तधामभिः स्वाहा।। देवेभ्य इदं न मम । इदं विष्णुर्मेघातिथिर्विष्णुर्गायत्री। प्रायश्चित्ताज्यहोमे विनियोगः । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं । समूळ्हमस्य पांसुरे स्वाहा।। विष्णव इदं न मम ।। व्यस्तसमस्तव्याहृतीनां विश्वामित्रो जमदग्निर्भरद्वाजः प्रजापतयोऽग्निर्वायुः सूर्यः प्रजापतयो गायत्र्युष्णिगनुष्टुप् बृहत्यः । प्रायश्चित्ताज्यहोमे विनियोगः। ॐ भूः स्वाहा । अग्नय इदं न मम । ॐ भुवःस्वाहा । वायव इदं न मम। ॐ स्वः स्वाहा । सूर्याय इदं न मम। ॐ भूर्भुवः स्वः स्वाहा प्रजापतय इदं न मम। ततो ब्रह्मा कर्तारं परीत्याग्नेर्वायुदेशे तिष्ठन्नेता एव अयाश्चाग्नेस्येत्यादिना सप्ताज्याहुतीर्जुहुयात् ।। त्यागं यजमानोऽत्र कुर्यात् ।। ततस्तत्तत्स्यो ब्रह्मैव मंत्रे विपर्यासादिनियतनिमित्ते सति । यद्वो देवा अभितपा मरुतस्त्रिष्टुप् ।। मंत्रविपर्यासादिनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः । ॐ यद्वो देवा अतिपातयोनि वाचाच प्रयुती देव हेलनं । अरापो अस्मा अभिदुच्छुनायते न्यत्रास्मिन् मरुतस्तन्निधेतनस्वाहा । यजमानः । मरुभ्द्यः इदं न मम । अनाज्ञातमिति मंत्रद्वयस्य हिरण्यगर्भोऽग्निरनुष्टुप् ज्ञाताज्ञातकृतदोषपरिहारार्थ-माज्यहोमे विनियोगः ।। अनाज्ञातं

रुद्रायेदं न मम" ह्मणून पाण्यास स्पर्श करावा. नंतर पळीनें प्रायश्चित्तार्थ घृतानें सात (७) वेळा होम करावा. त्यावेळी खालील मंत्र ह्मणावेत. "अयाश्चेति मंत्रस्य०" इत्यादिकांच्या योगें सांगितलेल्या प्रकाराने ते ते जप व होम करावेत.

यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पयत्वं हि वेत्थ यथातथ स्वाहा ।। यजमानः अग्नय इदं न मम। पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः। अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथ स्वाहा ।। यजमानः अग्नय इदं न मम । यत्पाकत्रेत्यस्य त्रितोऽग्निस्त्रिष्टुप् ।। न्यूनातिरिक्तपरिपूर्णाज्यहोमे विनियोगः । यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः ।। अग्निष्टद्धोता ऋतुविद्विजानन्यजिष्ठो देवा ऋतुशो यजाति स्वाहा ।। यजमानः अग्नय इदं न मम । स्कन्नभिन्नाद्यनियतनिमित्ते सति वक्ष्यमाणप्रकारेण तत्तत्प्रतिपदोक्तजपहोमान् कुर्यात् । ब्रह्माभावे यजमान एव वै तान् प्रायश्चित्तादीन् कृत्वा अन्यस्मै वरं दद्यात् ।। ततः तंडुलकणान् समिद्दर्भशकलान् अभ्दिः प्रोक्ष्य अग्नौ प्रहरेत् ।। ततः यजमानः अवभृतस्थानीयपूर्णपात्रं जलेन मार्जनं कुर्यात् ।। तद्यथा ।। पूर्वासादितं पूर्णपात्रमास्तीर्णं बर्हिषि दक्षिणपाणिना निधाय । तत्र गंगादिपुण्यनदीः स्मरन् दक्षिणपाणिना स्पृशन् । पूर्णमसि पूर्ण मे भूयाः । सुपूर्णमासि सुपूर्णं मे भूयाः ।। सदसि सन्मे भूयाः । सर्वमसि सर्व मे भूयाः ।। अक्षितरसि मा मेऽक्षेष्ठाः । इति जपित्वा कुशाग्रैः प्रागादिपंचदिक्षु जलमंत्रैः यथालिंगं सिंचेत् ।। तत्र मंत्राः। प्राच्यां दिशि देवा ऋत्विजो मार्जयंताम् ।

ब्राह्मण जवळ नसल्यास यजमानानें स्वतः हें प्रायश्चित्तादिक करून दुस-यांस वर द्यावा. नंतर तांदुळाचे कण, समिधा, व दर्भशकल ही पाण्यांत भिजवून अग्नीमध्यें जोरानें फेकावींत. नंतर यजमानानें अवभृथस्थानीं असलेल्या पूर्ण पात्रांतील जळानें मार्जन करावें. तें असें :– पूर्वी घेतलेलें पूर्ण पात्र, बई (पात्रविशेष) पसरून उजव्या हातानें ठेवून, त्या ठायीं गंगादि पुण्य नदीचें स्मरण करून उजव्या हातानें स्पर्श करून, "पूर्णमसि०" इत्यादि जप करून कुशाग्रानें पूर्वादि पंचदिशांस जलमंत्रांनी यथालिंग सिंचन करावें. त्यावेळी, "प्राच्यांदिशि०"इत्यादि मंत्र ह्मणून एकेक पळीनें एकेक दिशेस याप्रमाणें सर्वही दि-

दक्षिणस्यां दिशि मासाः पितरो मार्जयंताम् । प्रतीच्यां दिशि ग्रहाणि पशवो मार्जपंतास् । उदीच्यां दिश्याप ओषधयो वनस्पयो मार्जयंताम् ।। ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयंताम् ।। इत्येकश्रुत्या पठन् प्रतिदिशं सिक्त्वा ।। वामभागे स्थितपत्न्या सह कुशाग्रैः स्वशिरसि मार्जयेत् ।। तत्र मंत्राः ।। आपो अस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् । मार्जने विनियोगः । ॐ आपो अस्मान्मानरः शुंधयंतु घृतेन वो घृतप्वः पुनंतु । विश्वं हिरिप्रं प्रवहंति देवी रुदिदाभ्यः शुचिरा पूतयेमि । इदमापः सिंधुद्वीप आपोनुष्ठप् । मार्जने विनियोगः ।। इदमापः प्रवहत यत्किंचिद्दुरितं मपि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं ।। सुमित्र्यान आप ओषधयः संतु। दुर्मित्रास्तस्मै संतु । इत्येतैः मंत्रांते मार्जनं कृत्वा।। योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । तं हन्मि इति नैऋतिदेशे कुशाग्रेरपः सिंचेत् ।। ततो यजमानः वामपार्श्वस्थितपत्न्यंजलौ पूर्णपात्रस्थितं जलं । माहं प्रजां परासिंच । यानः सयावरीस्तना । समुद्रे वो निनयानि नः । स्वं पाथो अपीथेति मंत्रमेकश्रुत्या पत्न्या वाचयन् स्वयं वा पठन् निनयेत् । अंजलिस्थजलैः ब्रह्मा दर्भाग्रेण पापापनोदनार्थ आत्मानं यजमानपत्नीं च प्रोक्षयेत् । पत्नी तज्जलं बर्हिषि निर्षिचेत् । ततः कर्ता अग्नेर्वायव्यस्थितः संस्थाजपे-नोपतिष्ठेत।। तद्यथा ।। अग्ने त्वं न इति चतसृणां गोपायनालोपायना वा

शांस सिंचन करावें वामभागीं असलेल्या पत्नीसह आपणांवर कुशाग्रानें मार्जन करावें. त्यावेळी "आपो अस्मानि" त्यादि मंत्रांचा उपयोग करावा. "योऽस्मान्द्वेष्टि" इत्यादि मंत्रानें नैऋत्यदिशेस कुशाग्रानें उदक सिंचन करावें. नंतर यजमानानें वामभागीं असलेल्या पत्नीच्या ओंजळींत पूर्ण पात्रामधील पाणी, "माहं प्रजां परासिंच०" इत्यादि मंत्र पत्नीकडून ह्मणवून व स्वतः ह्मणून, पळीनें-घालावें. नंतर ब्राह्मणाने दर्भाग्रांनी अंजुळींतील पाण्याने आपणांस व यजमानपत्नीस प्रोक्षण करावें. नंतर पत्नींने ते जल वेणींत प्रोक्षण करून घ्यावें.

बंधुः सुबंधुः श्रुतबंधुर्विप्रबंधुश्चैकैकर्चा ऋषयः ।। अग्निर्देवता द्विपदा विराट् छंदः । अग्न्युपस्थाने विनियोगः । अग्ने त्वं नो अंतमः । उत त्राता शिवो भव वरूथ्याः । बसुरग्निर्वसुश्रवा-अच्छानक्षि द्युमत्तमंरयिंदाः। सनो बोधिसुधी-हवमुरुष्याणो अधायतः समस्मात् । तं त्वाशुचिष्ठदीदिवः सुन्नाय नूनमीमहे सखिभ्यः ।। ॐ चमे स्वरश्चमे यज्ञोपचतेनमश्च। यत्ते न्यूनं तस्मै ते उपयत्तेऽतिरिक्तं तस्मै ते नमः । स्वस्ति श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलं । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन।।" ततो ब्रह्मापि तथैव स्थित्वा एतैरेवोपतिष्ठेत । ततः कर्ता (आचारात्) मानस्तोकेति कुत्सो रुद्रस्त्रिष्टुप् विभूतिग्रहणे विनियोगः । ॐ मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः । वीरान् मानो रुद्रभामितो बधीर्हबिष्मंतः सदमित्वा हवामहे । इति स्रुवबिलपृष्ठेन विभूतिं गृहीत्वा "त्रियायुषं जमदग्नेरिति" ललाटे । कश्यपस्य क्रियायुषं " इति कंठे । "अगस्त्यस्य त्रियायुषमिति" नाभौ । "यद्देवानां त्रियायुषमिति" दक्षिणस्कंधे "तस्मे अस्तु त्रियायुषमिति" वामस्कंधे । सर्वमस्तु "शतायुषमिति" शिरसि धारयेत् । ततः कर्ता परिस्तरणानि विसृज्य । अग्निं परिसमूह्य परिषिच्य । विश्वानिनो दुर्गहा जातवेद : । सिंधुं ननावा दुरितातिपर्षि। अग्ने

नंतर कर्त्यानें अग्नीच्या वायव्यभागी बसून जपानें त्याची पूजा, "अग्ने त्वंन०" इत्यादि मंत्रांनीं करावी. नंतर जंगमानेही त्याचप्रमाणे राहून त्याच प्रमाणे त्याची पूजा करावी  नंतर कर्त्याने "मानस्तोके०" इत्यादि मंत्रानें पळींच्या बुडानें होमाच्या जागेतील विभूति घेऊन, "त्रियायुष०" इत्यादि त्या त्या मंत्रांनी ललाटादि त्या त्या स्थानीं ती धारण करावीं. नंतर चोहोकडे पसरलेले दर्भ काढून टाकून अग्नीस चोहोकडून फुंकून व परिषिंचन करून, "विश्वानि नो०"इत्यादि मंत्रांनी  त्याची पूजा करून नैवेद्यादि देऊन, दक्षिणा-

